ഭാരതത്തിന്റെ ആദ്ധ്യാത്മികജ്ഞാനവും സാംസ്കാരികപൈതൃകവും പരിപോഷിപ്പിക്കുകയും പ്രചരിപ്പിക്കുകയും ചെയ്യുന്ന മഹദ്ഗ്രന്ഥങ്ങൾ, അവയുടെ മൂല്യവും വ്യക്തതയും ഒട്ടും ചോർന്നുപോകാതെതന്നെ, നൂതന സാങ്കേതികവിദ്യ ഉപയോഗിച്ച് പരിരക്ഷിക്കുകയും ജിജ്ഞാസുകൾക്ക് സൗജന്യമായി പകർന്നുകൊടുക്കുകയും ചെയ്യുക എന്ന ശ്രേയസ് ഫൗണ്ടേഷന്റെ ലക്ഷ്യ സാക്ഷാത്കാരമാണ് ശ്രേയസ് ഓൺലൈൻ ഡിജിറ്റൽ ലൈബ്രറി.

ഗ്രന്ഥശാലകളുടെയും ആദ്ധ്യാത്മിക പ്രസ്ഥാനങ്ങളുടെയും വ്യക്തികളുടെയും സഹകരണത്തോടെ കോർത്തിണക്കിയിരിക്കുന്ന ഈ ഓൺലൈൻ ലൈബ്രറിയിൽ അപൂർവ്വങ്ങളായ വിശിഷ്ടഗ്രന്ഥങ്ങൾ സ്കാൻചെയ്ത് മികവാർന്ന ചെറിയ പി ഡി എഫ് ഫയലുകളായി ലഭ്യമാക്കിയിരിക്കുന്നു. ഇവ കമ്പ്യൂട്ടറിലോ പ്രിന്റ് ചെയ്തോ എളുപ്പത്തിൽ വായിക്കാവുന്നതാണ്.

ശ്രേയസ് ഓൺലൈൻ ഡിജിറ്റൽ ലൈബ്രറിയിൽ ലഭ്യമായ ഗ്രന്ഥങ്ങൾ വ്യക്തിപരമായ ആവശ്യങ്ങൾക്കുവേണ്ടി സൗജന്യമായി ഉപയോഗിക്കാവുന്നതാണ്. എന്നാൽ വാണിജ്യപരവും മറ്റുമായ കാര്യങ്ങൾക്കായി ഇവ ദുരുപയോഗം ചെയ്യുന്നത് തീർച്ചയായും അനുവദനീയമല്ല.

ഈ ഗ്രന്ഥശേഖരത്തിന് മുതൽക്കൂട്ടായ ഈ പുണ്യഗ്രന്ഥത്തിന്റെ രചയിതാവിനും പ്രകാശകർക്കും നന്ദി രേഖപ്പെടുത്തുന്നു.

ശ്രേയസ് ഓൺലൈൻ ഡിജിറ്റൽ ലൈബ്രറിയെക്കുറിച്ചും ശ്രേയസ് ഫൗണ്ടേഷനെക്കുറിച്ചും കൂടുതൽ വിവരങ്ങൾ അറിയാനും പ്രവർത്തനങ്ങളിൽ പങ്കാളിയാകാനും ശ്രേയസ് വെബ്സൈറ്റ് സന്ദർശിക്കുക.

http://sreyas.in

# THE

# YÔGÂMRITATARANGINÎ

OF

## SRÎ-NÎLAKANTATÎRTHASWÂMÎ

श्रीनीलकण्ठतीर्थस्वामिकृतिः

# योगामृततरङ्गिणी ।

प्रसाधकः

सज्जनकृपाकाङ्क्षी शिवप्रसादः ।

( *Second revised edition* )

Printed by A. C. Chakravarty at the Mahamandal Shastra
Prakasak Samiti, Ld., Press, Benares Cant.
and Published by the Sivaprasada.

1910

BAJWADA SHETHSERI,
*Baroda, 30th March 1910.*

To

SWAMI NILAKANTHA TIRTHA.

DEAR SIR,

I acknowledge with great pleasure the receipt of the books sent by you as a present. The books contain verses—really the work of a great learned Pandit. The lovers of Sanskrit language would indeed derive merit from it. These books are valuable to me as they would be the treasures of my own poor library.

Expressing my thanks for this present.

I remain,
DEAR SIR,
Yours faithfully,
NARHARISHANKER
SHIVSHANKER SHASTRI, B. A.
*Sanskrit Teacher, Baroda High School.*

---

FRANKENMUTH,
MICH,
*September 2nd, 1905.*

DEAR SIR,

I cannot describe the delight that I feel over those two most precious booklets of yours which I got yesterday. Being the works as well as the gift of an eminent sage of India, these booklets will always remain priceless treasures of my library. Especially do I value the Yogamritatarangini; the subject interests me deeply......................I thank you a thousand times for your beautiful present.

Yours most truly,
(Sd.) J. J. MEYER,
*Prof. Dept. of Sanskrit,*
*The University of Chicago, U. S. A*

दक्षिणापथस्थसरस्वतीगृहमिति प्रसिद्धपन्तलन्तुराजवंशावतंसविद्वन्मूर्धन्यपूर्वाषाढासंभूत श्रीयुत सि॰ रामवर्मराजानां प्रशस्तिः—

असितगलयतीन्द्र ? त्वत्कृतिः सत्कृताऽलं जयति कविकुलेन्द्रैः सादरं मेदुरार्था । मम नयनपथं च प्रापिताऽद्य त्वयैव प्रतिनवपदयोगप्रसक्तकौतूहलैषा ॥ वैदुष्यं प्रकटीकृतं परमहो सीमातिगामि त्वया सर्वस्मिन्विषयेऽप्यनन्यकवितावैदग्ध्यसाधारणम् । तत्तद्व्याकरणप्रयोगपरम प्रौढिप्रकाशोदयात्किञ्चिज्ज्ञैर्मनसापि दुर्ग्रहतरा सैषाकृतिस्ते यतः ॥ २ ॥ सुप्तिङन्तपदचित्रमेलनमहत्तरार्थघटनाविधिस्फारपाटवहठाद्विपाटितकवीन्द्रगर्वगिरिकूटकः । अद्य सम्यगिह मामकीनहृदि भूरिमोदपरिवर्द्धनस्त्वं हृदाऽसि मम पण्डितप्रकरमस्तकस्थितिमनीयथाः ॥ ३ ॥ योगाभ्यासविधानमार्गपरमप्रावीण्यमप्युच्चकैस्तत्तद्दैवतभक्तिपूर्वकमहास्तोत्राणि चाहो तव । अद्वैताध्वनि सर्वलोकगहने सञ्चारचातुर्यकं सर्वं चैतदनन्यसूरिसुलभं वर्वर्ति सर्वोपरि ॥ ४ ॥ प्रतिपत्त्रप्रेषणे तु विलंबोऽकारि यन्मया । तत्कारणं शृणुष्वाद्य वक्ष्ये सौजन्यभूषणः ॥ ५ ॥ त्वन्निर्मितप्रचुरपद्यमहार्थचिन्ताजाजायमानरसपायससिंधुमग्नः । तज्जन्यकोमलतरङ्गगणापविद्धः कालस्य किञ्चिदपि नैवगतिं व्यजानाम् ॥ ६ ॥ पुस्तकस्य त्रयं त्वादौ लब्धमद्य चतुष्टयम् । देवस्तुतिज्ञानयोगप्रश्नोत्तरमनूल्कटम् ॥ ७ ॥ त्वद्वासदेशानभिज्ञं संशेते स्म मनो मम किंनामकं कथं वा ते कुस्तस्थं च भवेदिति ॥ ८ ॥ संपूर्वाजन्त शीङ्धातुः सुबन्तो मा स्पृशेद्यथा । तथा विविच्य वक्तव्यं सर्वं च प्रेरणान्मम ॥ ९ ॥

---

## महाराज राजश्री-

बि॰ए॰बि.एल् विरुदशालिविद्वद्वर एस्-वेङ्कटरमणार्यमहोदयानां प्रशस्तिः-

आर्याः श्रीनीलकण्ठयमिवर्याः ॥

सविनयनतिशतनिचितं तत्रभवत्प्रीतयेऽस्तु पत्त्रमिदम्
श्रीवेङ्कटरमणेन प्रणामपुरस्कारतो लिखितम् ॥ १ ॥
अतियाताः षण्मासाः प्राप्य भवत्प्रेषितं हि कोशयुगम् ।
कार्यभरात्प्रतिलेखे चन्तव्यमिदं महन्ममालस्यम् ॥ २ ॥
विज्ञानौचित्यवतां सकलकलारत्नशेवधिणां भवताम् ।
काव्ये गुणदोषाणां सर्षपतुल्यो विवेचने कोऽहम् ॥ ३ ॥
श्रीनीलकण्ठकृपया हरिभक्तिमरन्दपूरिता काचित् ।
सौभाग्यबहुललहरी श्रीयोगामृततरङ्गिणी स्रवति ॥ ४ ॥
अतिमधुराणि नितान्तं मयापि ज्ञानप्रदानि परिशील्य ।
रचनानि तत्रभवतां सम्मोदसमुद्रमग्नोऽहम् ॥ ५ ॥
बलवत्तमा हि वाञ्छा तथापि मे मानसेऽस्ति विज्ञातुम् ।
विदितोऽभूवं कथमिति तादृक्षाणां महीयसां भवताम् ॥ ६ ॥
भाग्यविशेषोऽकाण्डे करुणा वा कुमुदबन्धुचूडस्य ।
मध्यस्थसखिमणीर्वा कस्यापि भवेदपुण्यादेतत् ॥ ७ ॥
सौहार्दमत्रभवतामुपलभ्यानन्दतुन्दिलं स्वान्तम् ।
लेखप्रतिलेखमुखाद्विवर्धतां तदिति शङ्करं नौमि ॥ ८ ॥

Triplicane, Madras:
22nd March 1906.

(Sd.) S. BENKATARAMANAN.

# श्रीहरिभजनामृतम् ।

श्रीहरिः सर्वम् ॥ श्रीम् ॥ श्रीमन्नारायणपदतलद्वन्द्वमद्वैतकन्दं सर्वोत्कृष्टं स्वन मतिवराहात्मना चानुभुङ्क्ष्व । एवंकारे भवसि हि सुखी नित्यतृप्तस्त्व[1]मीतो यत्नाद्याच्ञां सफलय ततः पूर्णकामोऽप्यहं स्याम् ॥ १ ॥ [2]तूष्णींभावं विभुपदमितो वर्तितुं [3]मारसोतर्व[4]ष्ट्येषोऽङ्गालिकनयनसेव्याव विष्णो तदेनम् । स्वच्छामैत्येति न पुनरतो ठेहमित्यूषिषे यद्गोतायां [5]वज्र्युपलसुभगंभावुकाभोग[6]भोग ॥ २ ॥ साक्षाद्द्रष्टा त्वमिति सकलस्यापि साक्षीति वित्तः[7] सत्येवं सज्जन[8]गणिमि[9]हेडम्भो कथा मा वृथाज । मामुद्धर्तुं पतितनवसुधाकूलिनेत्राञ्चलेन त्वं जन्मा[10]न्धोर्यसकरुणया त्वां प्रपद्ये तदेकम् ॥ ३ ॥ श्रीकण्ठस्त्वत्यपचितिकृते [11]चूर्णपेषं पिनष्टि स्वाच्छन्द्ये नाशयकथितबीजं कृतो यः स एषः । इत्यालोच्य प्रकृतजननोपक्रमं सेव्यते यो दूर्वाकाण्डप्रतिनिधिरुचिर्मां स्वभू रक्षतात्सः ॥ ४ ॥ मायामात्रं तव वपुरिति ज्ञायते मोपते यत्तत्राकृष्टं भवतु भगवद्भिरुण्यतो दर्शयान्यत् । अन्वर्थं कुर्वन् निरुपमं नाम मायीति पश्चात्कार्यं जाने वचनविरतं युज्यते लिप्सितं यत् ॥ ५ ॥ ब्रह्मीभूय त्वयि तनुलये ज्ञानवार्चिर्विभागे संविद्रूपे सपदि विलयं याति कैवल्यकन्द । विष्णोरैक्यं [12]त्वज निधिनिधायं निरुध्य स्थितोऽयं यत्तद्ब्रह्म प्रणतहृदयाकूतकल्पद्रुकल्प ॥ ६ ॥ [13]पारम्यं मे निबिड-

---

१ ईतो = गतः ॥ इण् = गतौ ॥ २ तूष्णींभूय ॥ ३ मारसोतः = कामजनक । षु-प्रसवैश्वर्ययोरित्यस्मात्तृच् ॥ ४ आशास्तेऽर्थयते वाष्टि । इति भट्टमल्लः ॥ ५ वज्र्युपलः = इन्द्रनीलमणिः ॥ ६ भोगः = शरीरम् ॥ ७ ज्ञातः ॥ ८ गणिं = गगनम् ॥ ९ इट् = ईश ॥ १० यसु-प्रयत्ने ॥ ११ चूर्णवत्यनष्टि, शुष्कचूर्णत्यादिना पिषेणमुल् ॥ १२ निधिवन्निधाय ( निधि·निधायम् ) ॥ १३ परमत्वं, श्रैष्ठ्यम् ॥

सहजानन्दसन्दोहदायिन्साक्षात्कर्तुं खननमुदितं यत्त्वयाऽगाधबोध । उत्खातुं हृद्भुवमयमपास्योपलं देहसंज्ञं धीकुद्दालैर्यसति तदिमं धारय स्वे महिम्नि ॥ ७ ॥ [1]उद्बुद्धेर्युपकृतिदलच्चक्रजालेषु धिष्ण्यं कृत्वा मूलादिषु विधुसुधाधोर[2]रणीदिग्धगात्रम् । सन्दध्यां त्वां मयि कुरु कृपां तत्सुरद्विड्विकारिन्भूयात्प्रत्यक्षितहरिपदोऽयं [3]ह्यवयत्तावितीन ॥ ८ ॥ सामञ्जस्यं भजति नहि ते भेदद्वङ्गादृशेषु त्वत्तारथेषु स्फुरणसुखमात्रात्मक श्रीनिवास । इत्यस्मान्मां प्रबल करुणाधिष्ठितः सम्प्रपायाः प्रह्लादं [4]वा [5]प्रकृतिमृदुलं त्वत्पदं धारयेयम् ॥ ९ ॥ श्रीमद्विष्णोरमलचरितान्येव सेवेत नान्याद्यावत्तावत्सुखम[6]मृतसून्यत्र दुःखी य एषः । श्रुत्या युक्त्याऽप्यनुभवबलेनाच्युतं यत्सदाऽहं वेद्म्यात्मत्वेन तु करुणया मे क्रिया नित्यसौख्यम् ॥ १० ॥ कर्तुं मेऽनुग्रहमुपनिषन्मात्रगम्ये विभो मन्नैजानन्दत्वत इह [7]चिक्लृप्सत्यहं तद्विवेक्तुम् । शक्तो न स्यामपि च भगवन्तो मया रुद्यते तत्काले तस्मादिममव सदानन्दसान्द्रस्वरूप ॥ ११ ॥ कार्याकार्यापदविरचनं यद्बहुत्राकरोस्त्वं भृत्यार्थे तत्तव करुणया ज्ञातमेतेन भूमन् । [8]यस्यत्वस्माविजचरणादासं भवान्मा[9]ऽवितुं यत्सर्वत्याद्यां शरणमयते त्वद्विरं सर्वथाऽयम् ॥ १२ ॥ भक्त्या यद्यत्कृतमभिहितं तत्तदिष्ट्यै तवेति स्तौमि त्वां नो [10]चरित इह संनह्यते बालिशेन । जायन्तेयादिकमुनिगिरा बुध्यतेऽशक्यताऽत्र श्रीवैकुण्ठेश्वर दनुजहन्मे प्रसीद प्रसीद ॥ १३ ॥ चित्ताम्भोजे मम चिरम[11]टाट्यां कुरुष्वाच्युत त्वं का हानिस्तत्कठिनमिति किं गोपिकानां [12]व नास्य । योगाभ्यासादपि तु मसृणं पश्य पश्यात्मयोने नत्वाष्टाङ्गैः [13]पृणाति तदयं मा बिलंबस्व लेशम् ॥ १४ ॥

---

१ उद्बुद्धेश्वरी=प्रबुद्धाशक्तिः ॥ २ परम्परा ॥ ३ अप्रमेय । (अपरिच्छेद्य) ॥ ४ वा=इव ॥ ५ स्वभावकोमलम् ॥ ६ अमृतं सुवत इत्यमृतसूनि । षूङ्-प्राणिगर्भविमोचने ॥ ७ परिणन्तु मिच्छति ॥ ८ यसु-पयत्ने ॥ ९ मा=माम् ॥ १० महिमगणने नह्यते । पा० ॥ ११ अटनम् ॥ १२ व=इव । वं प्रचेतसि जानीयादिवार्थे तु तदव्ययम् । इति कोशः ॥ १३ पृण-तर्पणे, अग्निं पृणाति पृणति द्विजदेवतांश्च । इति कविरहस्यम् ॥

कश्चित्स्निग्धाञ्जनगिरिसमं त्वां गृणातीह तद्वच्चन्द्राङ्कश्रीमुषमितर एकः कलायाभिरामम्। देव त्वाऽन्यः कवयति घनाभं परो नीलकंठग्रीवाप्रख्यं परमनुपमं सोऽयमीश प्रसीद ॥ १५ ॥ नीलग्रीवोपमितिकथनं मामकाख्याश्रुतौ ते ध्याकारः स्यान्मम विषयको नैलकंठाद्गुणधात्। इत्येव श्री१कमन न भवानन्यथा चिन्तयेन्मां यत्कल्याणात्मकपरशिवध्यानधिष्ण्यामलात्मन् ॥ १६ ॥ कैवल्याख्यां २सुखकणकरालां समाप्यैव संस्थां ३नर्चेत्भूयः स्वभुवमयमित्यात्मनाथो भवान्किम्। तूष्णीमास्ते वदतु भगवांस्तच्चिदानं चिकित्सां कुर्याँ विष्णोः परकरुणाया नो विलंबं सहेऽहम् ॥ १७ ॥ जाने शार्ङ्गिन्न खलु भवतोऽकिं४म्पचानाशयं यज्ज्ञानेऽभीष्टं रचयितुमहो शक्नुयां ५कारिकां ते। अग्रे भूत्वा वद करुणया तत्कथञ्चिद्व्यतिष्ये भक्त्याऽहं मेऽनपरशरणो मे प्रसीद प्रसीद ॥ १८ ॥ भो भोः शौरे मम शिरसि ६मतृध्रुक् द्विपाकार्मणं ते हस्तं कृत्वा शमय भगवन्हृद्रुजं त्वां प्रणौमि। भूयो भूयो नतिमपि किरन्नैन्दवस्मेर विष्णो नातोऽन्यस्मै प्रभवति अङ्गाऽभीष्टसन्तानशाखिन् ॥ १९ ॥ कोऽन्यो माऽवेद्विधुपदसरोजातनिष्यन्दमाध्वी७गृध्यद्भृङ्गं वद वद हरे श्रेयसाहो ममैकम्। सर्वेशत्वक्षतिकरमिदं मा वचो वोच विष्णो किन्त्वेनं भोः प्रणतशरण त्वं प्रपाया मुकुन्द ॥ २० ॥ वाचा८राद्धत्रिभुवनपतिर्मे ह्वि९तस्यार्थे १०ईट्टे विष्णुं नान्यं कथत इह भो त्वत्स्मृतेस्संस्कृतायुः। तत्त्वं कूलंकषकरुणयाऽऽघूर्णितान्तर्गिरः सन्कुर्या नोऽनुग्रहमजगतिस्त्वां विना कुत्रचिन्न ॥ २१ ॥ नैवात्मा च प्रिय इति भवान्यत्त्वभाणीत्स्वभृत्यं वार्हस्पत्यं स इव भगवंस्तन्मृषा वा न भक्तिः। किंवा मेऽस्य प्रविश हृदयं शोधयार्द्रं न चेत११त्कारो १२रुच्याऽस्त्वज तव तदानन्ददीप प्रसीद ॥ २२ ॥ देवः कृष्णायत इति नहि क्वापि कोऽपि स्वभृत्यप्रेमावेशात्स्वकमहिमसंप्रापसे

---

१ रमाकामुक ॥ २ सौख्यलवतुङ्गाम् ॥ ३ ऋच-स्तुतौ ॥ ४ अक्षुद्राभिप्रायम् ॥ ५ क्रियाम्। एवुत् ॥ ६ सद्द्रोहिद्विपाकर्मठम्। (कार्मण: कर्मणि कुशल; अण्) ॥ ७ लुभ्यद्भ्रमरम् ॥ ८ वाक् ॥ ब्रह्माणी वचनं वाचा। इति कोशः ॥ ९ चीर्णस्य ॥ १० ईड-स्तुतौ, अदा० आ० प ॥ ११ कारः=क्रिया ॥

यत्ततोऽहम् [१३]लंभं लंभं [१४]रमतिजनकामोदमेनं नुवंस्त्वां नामं नामं बद्धबुद्धिर्भवामि ॥ २३ ॥ त्वद्बद्धात्माऽस्म्यजय [१]भरिमासक्तिमुत्सार्य विष्णो न स्थेयान्मे मतिरिति सकृद्वस्तुयुग्मे मुरारे। कालोऽयं मां सुखयितुमिदानीं तवेहाद्वयात्मचोदास्यं चेद्भवति विफला गीत्युदीता प्रतिज्ञा ॥ २४ ॥ हृन्माठर्यं[२] ननु रुजति मे त्वचिविष्टं व्यथाख्यो [३]हिंसीरस्तं जहि सुखय मो माऽतिदुर्लभरूप। वेलालंघिप्रतरलसुधा[४]स्तिभिगंभीरिमाऽथो भूयादस्येत्यज विवरग त्वां मुदा संप्रपद्ये ॥ २५ ॥ वैकुण्ठेत्वासुरभिरयथास्थित्य[५]मानस्यतृण्यां [६]तर्णात्वस्य प्रदिशतु तथाऽऽनन्दमन्त्तानवन्धम्। तत्ते सौख्यप्रसविपदयंयम्यमानान्तरंगो हे विष्णो त्वां निखिलजनहृत्साक्षिरूपं भजामि ॥ २६ ॥ विध्वंघ्रयुत्या सुरपुरभरीस्वर्वधूकेशवेशभ्रश्यन्म[७]न्दारकसुगभिला विष्णुपत्प्राविरज्जुः। जातेहत्यान्यवत इति यन्नात्र चित्रीयते तत्त्वन्माहात्म्यं गणनविषयं नेति हे स्वारतीड ॥ २७ ॥ लीलामूर्तिग्रहणमिह ते मादृशत्राणमेकं हेतूकृत्य प्रकृतमिति सन्निश्चयः किं न तद्वत्। ओङ्कारं वा श्रवणविषयीकुर्वतो नेति वाचं वन्देऽहं त्वां जननहर जञ्जन्यमानादरेण ॥ २८ ॥ [८]भासन्तान्तःपुरुषमुपतिष्ठे हरिं दीप्रमुच्चैर्भानुर्यच्छाय्युपगमविधौ राजमार्गायते हि। अस्मात्त्वत्प्रीत्युदयजनकं नास्ति यत्तन्मुरारे पूर्णानन्दं वितर भगवन्दासमेनं प्रपाहि ॥ २९ ॥ हस्तग्राहं चरणकमलं वैधवं मानसाख्ये कासारेऽस्य क्षिपतु भगवन्न[९]ष्टिराहो भवेत्का। तेनायं स्यात्परमसुकृती निश्चयेन त्रिधन्यस्तस्माद्याच्ञां मम सफलयन्देह्यनुज्ञां नमस्ते ॥ ३० ॥ हरिः ॥ शिशुसंज्ञमुनीन्द्रपादपीठायितमूर्ध्नाऽसितकन्धरेण सूक्तम्। मुरभिद्भजनामृतं हृदन्तः कुरुते यः स समाप्तकाम उक्तः ॥ ३१ ॥

॥ इति हरिभजनामृतं समाप्तम् ॥

---

१२ दृष्टा ॥ १३ लब्ध्वा लब्ध्वा ॥ १४ रमतिः=कामः (औणादिकः)। १ भरिमा=कुटुंबम् ॥ २ मनोमुनिम्। (गर्गादित्वान्माठर्यः) ॥ ३ दुष्टः ॥ ४ स्तिभिः=समुद्रः ॥ ५ अमानस्यं कृच्छ्रकष्टम् इति कोशः ॥ ६ तृणभक्षणे ॥ ७ कल्पोद्भवेति। पा० ॥ ८ भासन्तः सूर्यः ॥ ९ नष्टिर्नाशः ॥

## अथ विधुनवसुधाभरीप्रारभ्यते ।

हरिः ॥ कल्याणं वितरतु शौरिशाङ्घ्रिदोण्यायैतस्मै प्रणतभवार्दनो हयास्यः । यत्प्रीत्याऽपर इव गोष्पतिर्भवेत्सोऽप्येकान्तेन हि लघु [1]किम्पचानवाग्यः ॥ १ ॥ स्वत्वेनाच्युतमनुभूय मुक्तिसौधं स्वारोढुं मम [2]चपलाधरांघ्रिसेवा । निःश्रेणीभवतु सदेति [3]कामितार्प्तिस्वःकल्पाङ्घ्रिपमजमन्वहं प्रपद्ये ॥ २ ॥ सिष्णासुर्विधुकरुणामृतोदराशावस्यङ्ग [4]स्वजनभियार्ऽद्रिभिद्रूपः [5] । यद्विष्णोर [6]भ्यरणिसमुत्थदुःसहार्चिर्निस्तप्तः स्वयमपि नित्यभक्त एषः ॥ ३ ॥ संभूतं मधुमथनास्य दुःखपङ्कं [7]नाशाद्वाद्वयसमिवाशु पाहतो माम् । नो याण्याऽमृतकरुणैव काल ऐदम्पर्यं यद्भवतु न तद्वचोऽतिभूस्य ॥ ४ ॥ विष्णो त्वद्विहरणयोग्यमास्तृणीय[8] स्वान्ताम्भोरुहि [9]तलिमं ममास्मिवृत्या । भोगीन्द्रप्रतिकृतिकं विधित्सुरन्तः स्थित्वा मामवतु भवान्ततोशसोतः ॥ ५ ॥ आपीयाच्युत तव कीर्तनानि साक्षादैकात्म्यप्रसविसमाधिवारिसुन्ति । अस्यान्तःकरणसमाख्यचातको मे नो [10]माङ्क्षोद्विषपर्यविषांब्वतोऽव माऽज ॥ ६ ॥ शाङ्गिंस्तेऽक्षयकरुणाकटाक्षधारा स्वर्णद्या मयि सहपाठवीथिमेतु । श्रीकंठाह्वय इति चैष तत्कृतेऽहं विध्वहां दध उरुगीत ते समर्चाम् ॥ ७ ॥ शोणांभोरुहसखमक्षि तेऽज भूयात्कारुण्याभिधमकरन्दबिन्दुसान्द्रम् । [11]यत्स्वादे हृदयमधुव्रतो मदीयो विष्णो स्यास्त्वनुभविता सुखं सदैव ॥ ८ ॥ [12]स्वेक्षाऽऽयल्लककृशितान्तरङ्ग एष त्वां सेवेऽच्युत करुणातरङ्गिताक्षम् । तद्देवोद्धर पर मानसैणशावं वाधान्धेर्मम नवमेघगोत्रगात्र ॥ ९ ॥ [13]वैदेहीहृदयरुहप्रलीनकालेयारक्तोरसि तव नादधा गुहं किम् । कारुण्यात्तदिति न च प्रयोजनार्थं शङ्क्ये

---

१ क्षुद्रगिरा ॥ २ चपला कमला लक्ष्मीरिति विश्वः ॥ ३ पाग्रूपविधुमहमन्वहमिति पा० ॥ ४ भयं भियेति शब्दार्णवः ॥ ५ भिद्रं वज्रम् ॥ ६ अरणिः=सूर्यः ॥ ७ परिमाणे द्वयसच् ॥ ८ विस्तारयेयम् ॥ ९ तलिमं कुट्टिमे तल्प इति र० मा० ॥ १० माङ्क्ष-काङ्क्षायाम् ॥ ११ आहारो भोजनं स्वाद इति हलायुधः ॥ १२ आयल्लकमुत्कण्ठा । इति यादवः ॥ १३ हृदयं चित्तवक्षसोरिति कोशः ॥

तत्कुरु कृपयेममेवमेव ॥ १० ॥ चिन्मुद्राविवृतनिजस्वभावदार्ढ्यं कर्तुं मां भवतु कृपार्द्रदृष्टिपातः । श्रीश त्वां शमयधनांतरब्जभृंगं सौषुम्ने पथि विधिवत्समर्हयामि ॥ ११ ॥ १श्रीशेत्तार्बुदतपजानुकूल्यवार्ष्ण्याबाधाकषितकषायितान्तरंगम् । संस्कर्तुं कमिहर सेष तत्प्रसन्नस्त्वं विष्णो वितर तवानतिं दधाति ॥ १२ ॥ उद्यत्कोट्यरुणार्कविच्छटं किरीटं माणिक्याकरपरिपन्थिनं स्मरामि । हृद्यन्तर्नरकविनाशनस्य विष्णोः सङ्कीर्णालकमलिकं च सर्वकालम् ॥ १३ ॥ भ्रूयुग्मं मदनशरासनप्रतीपं चाकोराद्यरुणिमदायिनेत्रशोभि । २कुर्वेऽन्तस्तिलसुमगर्वखर्विनस्यामेवं संस्मितवदावरूप विष्णो॥ १४ ॥ चित्ताब्जे मम ३मधुमत्प्रवालशोभालुण्टाकाधर उदितः सदा चकास्तु । तद्गण्डोपलमुकुरप्रविष्टकर्णोत्तंसश्रीमकरमहामणिद्वयं च ॥ १५ ॥ वैकुण्ठेशय तव यत्स्मितस्य साक्षादौत्कौमुद्गतसितिमेव पूर्वकोटिम् । एषोऽहं परिकलयामि हास्यमेनत्तन्मन्दारकगुणकारि सर्वदैवम् ॥ १६ ॥ सत्कण्ठोदित तव कण्ठलग्नमालां धत्तेऽयं हृदि ४सपतीयते श्रियो या । विष्णो ५कुस्तुभभवमण्युदारवत्सं श्रीवत्सेन च सह नित्यसौख्यवृत्यै ॥ १७ ॥ दौर्भाग्यासुरकभुजिक्रियाचणांस्ते वज्जोग्रान्मम मनसा करान्स्मरामि । हे विष्णो प्रलयदिनेशदीप्रचक्राब्जाम्भोजोद्भटगदिकाधरान्मुरारे ॥ १८ ॥ याह्यन्तर्भ्रमर मुकुन्दनाभिपद्मं यन्माध्वीं रिरसयिषत्यहो अजाली । तत्पीताम्बरमेव तत्र तेजः सान्ध्यं नाण्वपि विहरान्वहं यथेच्छम् ॥ १९ ॥ ऊरू हे मुरहर हस्तिशावहस्ताग्राकर्णजपमनुसन्दधामि विष्णो । कैवल्यप्रद परिभूतकूर्मराजं चित्ते ते प्रपद'मजा'व मां कृपातः ॥ २० ॥ सन्तानप्रतिनवपल्लवाभिरामं विन्यस्याच्युत तव पादमस्य मूर्ध्नि । सन्तापं शमय कृपामृतं विकीर्य त्वामीशं शरणमितो व्रजामि चैकम् ॥ २१ ॥ स्निग्धेन्द्रोपलमधुरं स्वरूपमेकं हृद्यन्तः स्फुरतु सदैव ६कैशवं मे । आढ्यंभावुकपदमेतु निर्विशंके येनेदं मम मन एषमोऽभ्य-

---

१ आबाधा वेदना दुःखमिति कोशः ॥ २ नसा नस्या च नासिका । इति कोशः ॥ ३ लुण्टाकश्चोरः ॥ ४ सपत्नीयाचरति ॥ ५ कुस्तुभः समुद्रः ॥ ६ केशवस्येदं कैशवम् ॥

शायिन् ॥ २२ ॥ कारुण्यात्तव भवदावपावकस्त्वद्भृत्येष्वेणामलयजपङ्कतीति बुध्या । [१]तत्तामेत्यतिलघु सोऽयमित्यहं त्वां भोः [२]स्वामिन्नरणकाश्रयः प्रणौमि ॥ २३ ॥ यस्यन्तःकरणग [३]सौखसुप्तिप्रश्नः स्या [४]व्रश्चित्वाऽसदृशनचंपचाऽमनस्यम् । सारल्यान्मम मधुसूदनैतदर्थं त्वामर्थ्याम्युपनिषदेककंठगीत॥२४॥ भिक्षोच्यप्रतिनिधि मय्यनन्त भूयात्काकण्यं निगमशिरोरत्नप्रतिष्ठ । [५]भक्तान्तःकरणचकोरचञ्चुकोट्यां [६]भद्रश्रीमसृणरसोयतीश भो यत् ॥ २५ ॥ हे [७]मासप्रमितसुधामयूखलेखालोभ्यात्मन्विश मम [८]दृक्सृतिं मुकुन्द । विद्धोम्न्यच्युत [९]गहनंसदीशसूनुं त्वां सोमामृतपरिषिक्तगात्रमीडे ॥ २६ ॥ निर्गत्वा घटचडितोश [१०]दृक्कुडंगात्यातङ्गी रुचिरज ते कृपाऽन्धकारम् । मोहाख्यं मम कवलीकरोतु विष्णो त्वां वाचंयमयमिवन्दथं प्रपद्ये ॥ २७ ॥ विष्णोस्तेऽकुटिलकटाक्षकामधेनोः पूर्णानुग्रहमयमेव मे प्रदाय । [११]औधस्यं मम [१२]परिबृंहितायतोस्त्वं हे स्वामिन्कुरु सुखसन्ततीः प्रकामम् ॥ २८ ॥ कारुण्यात्समर्मतिशेष इत्ययं मे हृत्पुण्यंधय इत ईश तेऽङ्घ्रिपद्मम् । [१३]तद्भर्मं कुरु भगवन्विचारकृत्यामस्पृष्ट्वाऽमृतपिबचित्तचन्द्र विष्णो ॥ २९ ॥ त्वं तल्पायितभुजगेन्द्र पाहि माऽन्तर्नेत्रांधंकरणदराभिधानधूलिम् । धून्वंस्त्वाऽमृततटिनीं [१४]वगाह्य पश्चादर्हां ते मुरहर निर्भिदं करिष्ये ॥ ३० ॥ हरिः ॥ श्रीबालनामभगवच्चरणारुणाब्जहंसायितासितगलाभिधतीर्थजां यः । विष्णुस्तवामृतझरीं कुरुते हृदन्तः सम्पूर्णकाम इह चैष मतौ विभुस्यात् ॥ ३१ ॥

इति विधुनवसुधाझरी समाप्ता ।

---

१ तस्य भावस्तत्ता ॥ २ रणरणकमुत्कण्ठा ॥ ३ सुखसुप्तिं पृच्छतीति तथा ॥ ४ छित्वा ॥ ५ ङ्यापोरित्यादिना ह्रस्वः ॥ ६ घुसृणेति पा० ॥ ७ मासं प्रमिता ( मासप्रमितः ) ॥ ८ दृक्पथम् ॥ ९ देवराजानुजम् । सूनुः पुत्रेऽनुजे । इति विश्वः ॥ १० लतागृहात् ॥ ११ ( ऊधसि भवम् ) पयः ॥ १२ प्रचितोत्तरकालाः ( स्थिराः ) इति घण्टापथः ॥ १३ भरणं पोषणं भर्म इति हैमः ॥ १४ वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥

## अथ श्रीहरिपञ्चकम् ।

ओं तत्सत् ॥ आमोदामृतवार्धिवीचिपृषतक्लिन्नं करोत्वन्तरं कर्णाकर्णिकयोपवर्णितपरात्मैक्यप्रतिष्ठस्य मे । योगोदस्नपितात्मदर्पणतले तेजो दरीदृश्यते यद्विष्णोः स रमेरितस्मितसुधासारावसेकेक्षणः ॥ १ ॥ मान्तर्मार[1]समाख्यबीजगमितस्याचार्यकं योऽदधिष्ठेष त्वं शतकोटिशारदशशांकाभेक्षण श्रीपते ॥ [2]पिंषन्हृद्दरसंज्वरं दिश शमेनं [3]दन्दहीतीव यः कादाचित्कतया मुकुन्दपदकञ्जेन्दिन्दिरीभूतमोद ॥ २ ॥ दुःसाधं मधुभिद्गुणानुगणनं यद्यप्यहं स्तौमि तं [4]वाचालीकुरुते तदीयचरणश्रद्धापिशाचीति माम् । तस्मान्मेऽनुजिघृक्षयैव भवता भाव्यं मुरारेऽन्वहं नोदासीन्यमशंवदो भव कदाऽप्यद्वैतविद्याश्रय ॥ ३ ॥ मह्यं द्रुह्यति यस्त्वमुं सुखय इत्येतत्किमाचार्यकं तत्त्वं विस्मर भक्तगत्तिमबलाच्छंभोः [5]सतीर्थ्यीकुरु । त्वं वर्तस्व ममानुकूल्यविधिना [6]कारुण्यरिङ्खोलितः सत्वेपः सुशको न मेऽथ भगवन्नोरुच्यते वा न यत् ॥४॥ विष्णोऽन्तर्हरिणी [7]ममास्त्वखुरलीकृप्ता व्यथाव्याधतस्तन्मां रक्ष समामराश्रुतवरं सौख्यं नियच्छंस्तु मे । शिष्टानुग्रहविष्टरस्थितमहं त्वां मे भुवोरन्तरज्ज्योतिर्दीपदृशिक्रियैकविषयं कुर्यां कृपाधूर्वह ॥ ५ ॥ शिश्वर्थनामकयमीन्द्रपदाब्जभृङ्गश्रीनीलकण्ठरचितं हरिपञ्चकं यः । संस्मृत्य विष्णुमखिलेश्वरमेव चित्ते भक्त्या पठेत्स भविताऽत्र समाप्तकामः ॥ ६ ॥

समाप्तमिदं हरिपञ्चकम् ॥

---

## अथ विधुस्तवमधुद्रवः प्रारभ्यते ।

हरिः । हरिचरणसरोजचञ्चरीकान्तर[8]निबिरीसतमोद विधूय पापाः । [9]प्रकटयिषुरेष संस्तवीति स्वभुवमिहोदितभक्तिमित्यजैनम् ॥ १ ॥ धरतु

---

१ गमनस्य ॥ २ चूर्णयन् ॥ ३ अतिशयेन दहति ॥ ४ मुखरयति ॥ ५ सतीर्थ्या भव त्वमिति पा० ॥ ६ रिङ्खोलिः स्खोलतिश्छठेति कोशः ॥ ७ अभ्यासस्थानम् ॥ ८ निबिरीसं दृढं गाढमिति कोशः ॥ ९ प्रकटयितुमिच्छुः ॥

विधुरतिप्रकाशमन्तःकरणजलेरुहि१ चेन्दिरापतीनः । नमदमरकिरीटरत्नदीप्त्युतितपदाङ्कपरंपरः सदा मे ॥ २ ॥ नहि विदितमिदं कदा मदाधिं हरसि स्फुरीतदधीतसंस्तवस्त्वम् । अपि मतिबलतः करोमि तेऽर्हां मुरहर मा मयि भूरुदास्तवृत्तिः ॥ ३ ॥ मनुभुवनविधाविसमता शंकरमुखशङ्करता तवादिदेव । तदपि बत भवानिवार्तेः३ आस्ते मम सुखने किमितीश नैव जाने ॥ ४ ॥ क्षतिरत्र भविता नु कैतदीयायनत हरीश युभुत्सयाऽनुयोगम् । विधिनत विधिवत्प्रणम्य कुर्वे यद यद कामयितंब्रवर्जमेतत् ॥ ५ ॥ शरणमिलमङ्गं समात्मना चेद्व्रजति दरोऽभवि शंभमोति वाश्मा । स्थित इति नरकस्य जिष्णुरन्तर्व्यरहरणाय नतोऽस्मि कृता मे ॥ ६ ॥ तव पदतलयोर्लुठन्नमित्थं सहजकृपाभरलोलितान्तरस्त्वम् । कदर्थमिममथाखिलेकतात त्वरितरं ४दवयंस्तु चित्ततापम् ॥ ७ ॥ सुरमथनमिता प्रजाम्यहं गोतमगृहिणी मुनिरुट्शिलीकृताऽपि । तदुपरिकृतयत्पदाब्जपांसुसुतिबलतः स्त्रितराश्च बभूव सद्यः ॥ ८ ॥

हरिः ॥ एतद्यस्मात्स्वप्नसदृक्तं जगदुत्थं संविद्रूपे संप्रति यस्मिन्स्थितिमेति । रज्जावध्यारोपितनेत्रश्रुतिवच्च६ लोयेतान्ते यत्र तमन्तः कलयेऽजम् ॥ १ ॥ श्रीकृष्णांघ्रिद्वंद्वसरोजे मधुधाराऽस्त्यन्तभृंग त्वं पिब नित्यं यतवृत्तिः । इत्थंकारं यापय कंचित्समयं वा ताद्रूप्यान्मां पातु यथाऽजस्त्वयि लीने ॥२॥ वारंवारं विष्णुमुदारं हृदयान्तर्धारंधारं तत्पदमेष्यत्ययमेवम् । धीध्वस्तान्यालोचन आस्ते यदज त्वं धेया धूस्तम्भं तदमुष्यावनरूपम् ॥ ३ ॥ ब्रूहि त्वं माऽनन्यगतिं चेत्नहि रक्षेर्मा अन्योऽमुं कोऽवतु विश्वाश्रय विष्णो । पूजां सम्यग्देव यथाशक्ति विधातुं कुर्वे यत्नं तद्विमुखो मा भव किंचित् ॥ ४ ॥ विश्वस्मिंस्त्वत्त उदारः करुणाब्धे कर्तुं दीनानुग्रहमेकः परमास्ते । स्थित्वाऽन्तः संशास्ति सदा नो य इहार्थं वा, तं त्वां वेद्मच्युत तन्मामव नित्यम् ॥ ५ ॥ लोकेशाद्यस्तारकयोगाद्यमनन्तं स्वत्वेनान्तः पश्यति यत्रस्तुत

---

१ सरोरुह इन्दिरेति पा० ॥ २ अभ्यस्तपरिचयः ॥ ३ अवशः ॥ ४ उत्सारयन्दरीकुर्वन् ॥ ५ ॥ स्त्रीतरा ॥ ६ नेत्रश्रुतिश्चक्षुःश्रवा ॥

यकम् । वाचा नाप्यो नापि हृदेति श्रुतिमूलात्सच्चिन्मात्राकारमजं तं कलयेऽहम् ॥ ६ ॥ संसारान्धूद्धारवरत्राभिध[1] विष्णो चित्तेकृत्य त्वामज पूजां विदधेऽहम् । तत्त्वोऽनन्ताधिष्ठितमूर्ते कुरु शंभो सन्तप्तानामान्तरसौधोदकधार ॥ ७ ॥ यत्पद्भ्राक्कैवल्यपदं यात्यनिवर्त्यं साक्षी सर्वस्यापि य एकश्चितिरूपः । सान्द्रानन्दो भक्तमनोज्योत्स्निकयाक्तस्तन्द्रामन्तः कृन्ततु नित्यं मम सोऽज्ञः ॥ ८ ॥

हरिः ॥ कल्याणदत्रिदिवकुल्यावहेलकृतिकल्यानुरूपकृपयाऽतुल्याधकार्यरुशल्यावसित्यशोनिकल्याशयेश भगवन् । अल्यादृताङ्ग पदधूल्यापवार्य मतिशूल्याधिमाशु सुरभूबल्यात्मको भव सुगल्यारथप्रिय नृपल्याचितास्य सुखने ॥ १ ॥ शङ्का[2]विहीनमजसंकाशकार्यमिह पङ्कादुदञ्चयसि नो किं कारणं तदिमर्मिंकारगेश वद कं कालवैतु शरणम् । शं कामितद्युतरुमङ्कादुपेत्य च कथंकारमच्युत हरे शं कामयेत वत तङ्कातिपातपदपङ्काधिजात परतः ॥ २ ॥ नन्दात्मजं कुपितवृन्दारकेन्द्रमदकन्दानुरूपखनकं वन्दामहे रुचितवृन्दावने शिशुकवृन्दासुहिण्डततनुम्[3] । वन्दारुमौनिजनमन्दारकं स्फुटितकुन्दानुगस्मितसुधाचन्द्रायितं निहतसुन्दात्मजं परममन्दादरं परगुरुम् ॥ ३ ॥ जंभान्तकाद्दुरदकुंभाग्र्यगोपिकुचसंभारमर्दनकरं तं भावये कनकरंभास्यपत्रसुभगंभावुकांबरधरम् । कुंभार[4]मास्यपविडंभास्तहस्तपरिरंभान्वयेन सुखयन्नम्भांसि यो[5]व्रजति मां भालयेत च नु डिंभाश्रयैकचरणः ॥ ४ ॥ बन्धार्तिमाशु मम सिन्धावधीतगतिरन्धांबकोऽपनयद्गन्धाढ्यभूरुडनुबन्धाभिषेककरसन्धापरः स मधुहा । मांधातृसूनुहितसन्धानवल्लिमिह यं धातृमुख्यऋषति स्कन्धान्तरेयमपि सन्धारयामि च सगन्धान्तरंगकरिणः ॥ ५ ॥ वित्तेशसूनुसुखवृत्ते कृपाजललवोत्तेजितो मुररिपुश्चित्ते चकास्तु मम मत्तेभभीहरणवित्तेङ्गितः प्रतिपलम् । कृत्तेतरेशमतिमत्तेह एव लघु नुत्तेन्द्रनीलविभवो दत्तेष्टराज इह नृत्तेष्टशंभुर्विलसत्तेडितोरुचरितः ॥ ६ ॥ गन्ताऽस्म्यहं शरणमन्ता-

१ दामरज्जुर्वरत्रा चेति शब्दव्यूहतरङ्गिणी ॥ २ तुल्यसंकाशनीकाश इति कोशः ॥ ३ हिडि—क्रीडायाम् ॥ ४ अपास्य ॥ ५ व्रज—गतौ ॥

तिगं भुजगकन्ताधिकठभिति मच्चिन्तामममर्त्यरिपुहन्ता निवारयतु सन्तापनीं करुणया । नन्तास्मदेयमतिसन्तानलिप्सितसुचिन्तामणिर्यदुकुलेऽनन्तानुजात उरुसन्तानकप्रांतमदन्ताग्र्यस्मितसुधः॥ ७ ॥ एणाङ्कचूडपरबाणायितो रुचिरशोणाब्जयन्घुचरणः प्राणाधिकस्वजनपाणावपि प्रथितवीणाक्वणे ख उदितः। पीणातु नोऽसुरकशाणाधिकं स इह हूणादिकं च बलतः क्षीणाति यः सुगुणिनणां कृते सपदि बाणाहमः प्रशमनः ॥ ८ ॥ श्रीबालकाह्वयमुनिप्रवरांघ्रि[१]पद्मभल्लातनोलगतोर्थविनिर्मितं यः । भक्त्या विधुस्तवमधुद्रव मन्तरङ्गे कुर्यात्सभवेत्स यतधीः परिपूर्णकामः ॥ ९ ॥

इत्यष्टकत्रयपरिमितो विधुस्तवमधुद्रवः समाप्तः ॥

---

## स्वात्मसुधाकरप्रारम्भः ।

हरिः ॐ ॥

स्थास्नुचरिष्णुपदार्थावेशादर्शं निजानुभवगम्यम् । सच्चित्सुखस्वरूपं शिशुसंज्ञमहं स्मरामि किमपि महः ॥ १ ॥ अतिदुर्लभं नृजन्म प्राप्य नहि त्वं [२]रसिषाधयिषसि यदि । पुरुषार्थं [३]पुंस्तास्य क्वेह तवाहारमुख्यतः सैषा ॥ २ ॥ चेत्सार्था नृतयाप्यलमिति घट्टकुटीप्रभात कष्टदशाम् । संश्रयसि भोगिलोकातो मम वचनं शृणुष्व सुखमच्छेः ॥ ३ ॥ स्वाप्ययमायानूना जाग्रत्कालिक्यवेहि सम्यगिति । विशयो यदि चेत्प्रत्यग्दृष्टिमवष्टभ्य दर्शने यस च ॥ ४ ॥ संरूढेऽस्मिञ्जाग्रन्मायाऽस्तमियात्सुषुप्तिगेवास्याः । जातेयं कुत इति मा चिन्ताऽस्त्वस्त्वपि तु कथमिमांहन्याम् ॥ ५ ॥ अविचारितरमणीया कथितेयं तत्त्ववादिभिर्योद्दाम् । सहते न यत्स्वरूपं भ्रान्तिग्राहग्रहं स्मरैषि पदम् ॥ ६ ॥ अहमस्मि नित्यशुद्धः प्रत्यगभिन्नस्तथोऽपधिविहीनः । 'न निरोध' 'एक एवाग्र' ग्रयमातिश्रुतिर्भणति यस्मात् ॥ ७ ॥ त्रिपरिच्छित्तिविहीनस्तद्वत्तं त्रिविधभेदभिन्नोऽस्मि । अन्यस्मिन्नहमर्थारुढ्या भेदश्रुतेर-

---

१ राजहंसस्तु मल्लाक्षः । इति कोशः ॥ २ साधयितुमिच्छसि ॥ ३ पुंस्त्वम् ॥

भावाच्च ॥ ८ ॥ इदमर्थभूतबाह्यप्रपञ्चवस्तुष्वनात्मतैवमिह। अहमर्थ आत्मता च स्वानुभवाद्बुधजनस्य चाभिता ॥ ९ ॥ एते इदमहमाख्ये बुद्धी स्यातां विभिन्नविषयेहि । देहे चेदंकारा धीर्देहालंबनाऽपराऽऽत्मवशा ॥ १० ॥ स्वशरीर इदंध्यास्पद इह याऽहंमतिरियं महाभ्रान्तिः। यत्तदतस्मिंस्तद्बुद्धरूपाऽभ्रान्तस्य न क्वचिद्भवति ॥ ११ ॥ जडरूपपिण्डमेतन्नाहंधिषणाश्रयं ह्यनैकान्त्यात् । मत्पिण्डादिषु तद्वत्स्याच्चेऽचित्त्वाऽविभेदतः खमुखम् ॥ १२ ॥ तस्माच्चिद्रूपात्माऽहंबुध्यर्थोऽचिदेवमिदमर्थः । एष स्वयंप्रकाशोऽस्याहंविषयत्व एव सति साक्षात् ॥ १३ ॥ वृत्त्यनधीनतया घटकुड्यव्यतिरेकतो यतः स्फुरति। साक्षित्वेनाच्छान्तर्व्याप्यज्ञानं सवृत्तिरूढचिदा ॥ १४ ॥ प्रसतेऽस्तमेति वृत्तिस्तत्प्रायसपीतशंबरन्यायात् । स्वात्मन्ययमहमस्मीत्यवधारय निर्वृतिं परां च भज ॥ १५ ॥ योऽहंशब्दार्थोऽयं त्वंशब्दार्थो भवेच्च सन्देहः। त्वंप्रत्ययार्थ एवं स्यादहमर्थोऽपरो न कुत इतिचेत् ॥ १६ ॥ लक्ष्यीकुरुत उभौ तौ शब्दावेकं चिदात्मवस्तु यतः । अर्थमिमं श्रुतिराहाहंब्रह्मास्मीति याजुषी मधुरम् ॥ १७ ॥ जहदजहल्लक्षणया वैशिष्ट्यांशप्रहाणतः सिध्येत् । सम्यगखण्डरसस्त्वमहंब्रह्मेति मुख्यवाक्येषु ॥ १८ ॥ स्वात्मान्यतया भातं बुध्वाऽऽत्मत्वेन चैतदात्म्यमिदम् ॥ सर्वमितिश्रुत्यैतद्वेदनमपि चिद्घने विलाप्य परे ॥ १९ ॥ स्वस्थो भवति नरश्चेत्त्वक्षपि मुच्यते 'जगत्सत्ता । तत्सत्तयैव सिद्धा' कारणसत्तैव कार्य इष्टेति ॥ २० ॥ एकत्वेऽपि पृथक्त्वेनोक्तिः प्रत्यक्प्रकाशरूपस्य । अन्तःकरणविभेदानुरोधतः सर्वसाक्षिणो भवति ॥ २१ ॥ औपाधिकभेदेऽस्य प्रलीन ऐक्यं व्रजेच्चिदा खमिव । घटनाशे तत्सर्वत्यागे यत्स्यात्तदात्मना भाव्यम् ॥ २२ ॥ समवस्तुपरित्यागे शेषस्त्वात्मेति शासनाच्छ्रुत्या । निष्ठामास्थायैतामन्तेऽपि नरो यदेति लघु मुक्तिम् ॥ २३ ॥ श्रुत्येह चेदवेदीदित्यनयाऽऽन्मैकविक्तिरुपगीता१ । नोचेन्महती नष्टिश्चोक्ता तस्मात्तलोकगामिपशुः ॥ २४ ॥ यः कुशकाशालंबन्यायेन पदं समारुरुक्षति सः । पुरुषपदवाच्य एषोऽपर इह शोच्यः सदाऽऽद्रिमो वन्द्यः ॥ २५ ॥ अत्र तु मर्यादैका-

---

१ वेदनं ( ज्ञानम् )

वनमुपदेशक्रमस्त्विति जगाद । १ज्ञप्तेर्हेतुर्भगवान्वसिष्ठ इति चान्तेवासिशु-
द्धमतिः ॥ २६ ॥ तत्संशोध्य प्रज्ञां देशिकमेकं समाश्रयेद्यदिह । श्वश्रूनिग-
च्छोक्तिन्यायेनास्याधिकारिताऽऽत्मगिरि ॥ २७ ॥ करुणाघूर्णितचित्तो देशिक
एतं स्वरूपसाम्राज्ये । अभिषेक्ता चिन्मुद्राबन्धनतस्तं द्रुतं शरणमीयात्॥ २८ ॥
देहाद्यादावहमिति ममेति यो भाव एषकोऽध्यासः । विदुषाऽवश्यं त्याज्यः
सम्यक् स्वात्मैकनिष्ठयाऽयमपि ॥ २९ ॥ वासनयाऽध्यासोऽस्यास्तानवमाहुर्वि-
मुक्तिरित्यृषयः । तत्तां तनुतां नयतान्नैरन्तर्यस्वरूपनिष्ठातः ॥ ३० ॥ चेल्लक्ष्य-
च्युतमीषद्बहिर्मुखं धीस्ततस्ततो निपतेत् । सम्यक् प्रमादबलतः सोपानच्युत-
विलासकन्दुकवत् ॥ ३१ ॥ अपकृष्टं शैवालं यथाऽऽवृणोति क्षणाज्जलं च
तथा । मायाऽऽवरते प्राज्ञं वाऽपि पराङ्मुखमतोऽन्तरङ्गास्व ॥ ३२ ॥
अन्तःशीतलतायां लब्धायां शीतलं जगद्यस्मात् । तस्मात्प्रत्यग्दृष्ट्या स्थेयं
पाषाणवत्समाप्यैताम् ॥ ३३ ॥ हृदयग्रन्थेर्विलयस्तदैव निःशेषतो यदा
यमिनाम् । अद्वैतावस्थानाद्वयसहजातः स्वदर्शनं भवति ॥ ३४ ॥ चित्तेऽर्था-
दर्थान्तरमीते या स्थितिरिमामधिष्ठाय । मूकान्धबधिरकल्पं स्थातव्यं योगि-
भिर्निजानुभवे॥ ३५ ॥ अभिलषितवस्तुर्लब्धिक्षण इह याऽन्तर्मुखस्थितिरुदेति ।
तामाश्रित्य समस्तं विरहय्य सदाऽनुभूतिगो ना स्यात् ॥ ३६ ॥ संत्यक्त्वा-
भावेभ्यः सर्वेभ्यो भावनां तदवशिष्टा । या संविद्ब्रह्माख्या सैवाहमिति
स्थितो भवेत्सततम्॥ ३७ ॥ कल्पितसर्वपदार्थाधिष्ठानं ब्रह्म केवलं कथितम् ।
यत्तदहमस्मि नित्यं परमिति मौनेन तत्पदं समियात् ॥ ३८ ॥ वैराग्यस्य
फलं स्यादात्मज्ञानं तथोपरतिरस्य । हेतुस्वरूपकार्याण्यपि क्वचिद्व्यभिचरन्ति
कस्मिंश्चित् ॥ ३९ ॥ एवमपि पूर्णबोधे विदेहकैवल्यभाग्भवेत्कोऽपि । वैराग्यो
परतिभ्यामृतेऽपि ताभ्यामिहोर्ध्वगतिरेव ॥ ४० ॥ ब्राह्मैश्वर्यतृणीकृतिरव-
धिर्विरतेः स चैष बोधस्य । देहात्मवदेवास्य स्वरूपसम्पत्तिरूपदार्ढ्यं यः ॥४१॥
मर्यादोपरमस्य स्वाप्यवद्विस्मृतिः परा यैषा । कश्चित्क्वचित्पुमांसं त्रयोऽपि
वृणतेऽस्य निर्मलतपसः ॥ ४२ ॥ जीवन्मुक्तिसुखेच्छुः संगृह्णीयात्समं निरप-
वादम् । ज्ञानान्तरङ्गसाधनमेव हि मननाद्यपेक्षया श्रवणम् ॥ ४३ ॥ आचार्यैः

---

१ ज्ञप्तिर्ज्ञानम् ॥

श्रवणं नामाङ्गि विधीयत इतीरणादङ्गे स्तः । मनननिदिध्यासाख्ये नो बाह्याङ्गे शमादिकमपेक्ष्य ॥ ४४ ॥ उत्तरमीमांसाकृद्भगवान्व्यासोऽथशब्दतः प्राह । साधनचतुष्टयानन्तरकृत्येत्येव चात्मजिज्ञासा ॥ ४५ ॥ साधनसुभगं भावुकपुरुषमनालोच्य वरतिबोधतनुः । दिक्संख्याकं साधनमवश्यमर्ज्यं मुमुक्षुणा प्राक्तत् ॥४६॥ ज्ञानं च वस्तुतन्त्रं ह्युपासनं कर्तृतन्त्रमिति विद्यात् । बोधोऽनिच्छायामपि यत्स्याद्विषयेन्द्रियादिसंबन्धे ॥ ४७ ॥ अन्यदकर्तुं कर्तुं वाऽपरथाकर्तुमेष शक्तो ना । तस्मात्तदधीनं प्रतिबन्धे सति भवेन्न दृढ-बोधः ॥ ४८ ॥ नात्र विचारोऽपगुणः स्यात्क्वचिदपि तचिरुध्य प्रतिबन्धम् । सततं चिंतयतादा मतेः स्वरूपं न चेद्भवति सिद्धिः ॥ ४९ ॥ अन्यस्मिन्वा १जन्मन्यैहिकमित्यादिसूत्रतः श्रुत्या । २शृण्वन्तोऽपीत्युक्ता स्यादेव च तत्पुनः पुनर्विमृशेत् ॥ ५० ॥ पूर्णानुभूतिमीतः कुर्वन्निव कर्म लक्ष्यतेऽपि जनैः । दग्धपटन्यायेन स्थित्वाऽन्ते स्वप्रतिष्ठितो भविता ॥ ५१ ॥ चेत्संकल्पाशानुसन्धानहानं कुर्यान्मर्त्यः सर्वदाऽचित्ततां सः । संप्राप्तः स्याच्चेतसोऽकर्तृता या शास्त्रादौ सा निर्वृतिः सा ३समाधा ॥ प्रोक्ता साक्षात्कैवलीभाव एतन्निष्ठो भूयाद्भूय उत्पत्यकाङ्क्षी । स्वारब्धान्तेऽत्यन्तदेहापयोगे वैदेहीं चोपैति मुक्तिं स्वविद्वान् ॥ ५३ ॥ ओं ॥ बालाह्वभगवद्भत्यासितकन्धरतीर्थदृक् । विरच्यात्मकलानाथं भक्तितस्तत्पदेऽकरोत् ॥ ५४ ॥ ओं शान्तिः ॥

इति स्वात्मसुधाकरः समाप्तः ॥

---

## । अथ योगरहस्यकौमुदी ।

हरिः मम तु भगवद्बालाख्यश्रीविकर्तनविग्रहं विबुधसहजासंवित्सम्प्ररूढसुरद्रुमम् । कविकुलगिरां दूरं पारं भवज्वरवारिधेः सततमभयायैषोऽहं संनमस्य उपारतम् ॥ १ ॥ पवनयमनाद्धंसः सोऽहं स्वयं परमित्यहो विदितचरितोऽप्येवं न स्याचरः स्वयमित्यहम् । नियमनविधिं वक्ष्ये तद्द्राक्परिश्र-

---

१ ऐहिकमप्यप्रस्तुतप्रतिबंधे तद्दर्शनात् । ब्र० सू० ३ । ४ । ५१ ॥
२ श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यन्न विद्युरितिश्रुतिः ॥ ३ समाधानम् ( समाधिः ॥ )

मतो गतो भवति हि मरुत्प्राणः शून्यं पदं विवृतामृतम् ॥ २ ॥ वृषणगुदयोर्मध्ये मूलं पदस्य नियोजयंस्तदितरमथो मेढ्रे कृत्वा दृढं हृदये हनुम् । स्थिरतरदृशा नासाग्रं स्वं निरीक्ष्य जितात्मवाग्स्थितिमिह सदा कुर्यात्सिद्धं भवेदिदमासनम् ॥ ३ ॥ मितमितभुजो मुद्गं शालिं यवं च सितां पयोघृतयुतमितश्नन्तो नित्यं यमेयुग्यासने । निजपदतले ऊर्वोर्यस्मिंस्थिरे भवतो दृढं बहुतररुजामस्त्रं पद्मासनं त्विदमुत्तमम् ॥ ४ ॥ जितरय इतो बाह्यं वायुं प्रपूर्य सुधांशुना निजबलसमं यावच्छक्यं निरुध्य मरुन्मनाः । पवनविलयो नासाग्रे यद्भवत्यतिवेगतो मरुतमखिलं मन्दं मन्दं त्यजेदथ भानुना॥ ॥ ५ ॥ यत इह मरुत्त्यक्तो नाड्याभवेदनया खगं पुनरपि कलासंख्यामात्रात्मकेन च पूरयेत् । नियमितममुं कृत्वा तस्माच्चतुर्गुणमात्रया पवनमिडया तस्यार्धेन त्यजेत्समयेन वा ॥ ६ ॥ विसृजतु खगं मन्दं मा भूद्द्रुतं बलहानिकृद्भवति च यतः शीघ्रं वा स्यान्मरुद्ग्रहणं हठे । प्रहरपरतः सर्वत्रैवं नदि प्रति शीलयेद्विजितपवनः कोऽपि स्याच्चेत्स्वयं गुरुशिक्षितः ॥ ७ ॥ पवनविजये बद्धाकूतः सदा मृदुपीठगो वदनकुहराकृष्टं वायुं यथाविधि कुम्भयेत् । परशिवगते केदारे स्यान्मरुद्गमनं यथा पिहितवदनः फूत्कारं तत्तथैव समाचरेत् ॥ ८ ॥ अथ निजपदग्रन्थिं मूले दृढं घटितं व्यधादितरमपि तत्कृत्वा जानोरधःस्थितसंधिगम् । उपरि गतधीः सामोदं स्वां निपीड्य च सीवनीं पवनगमनं ब्रह्मद्वारे कुर्यात्परमादरात् ॥ ९ ॥ द्वितयमधिकं गुह्यं गुह्यादिदं परयोगिभिः परिचिततरं साक्षात्सिद्धैः सदा परमायनम् । निजहृदि हनुं निक्षिप्योर्ध्वाकर्षादनिलः[1] शनैरसतकुहरं गच्छेत्स्वैरं निरञ्जननामकम् ॥ १० ॥ मूलाधारे पवननियमश्चेतसा कार्य उक्तस्तस्मिंल्लीनं भवति हि मनो यावदेवं विदध्यात् । भूयस्तस्मादुपरि मरुतं कन्दपार्श्वे निरुन्ध्यात्स्वस्थो भूयाश्र इह ममाः सर्वरुग्जालमुक्तः ॥ ११ ॥ तद्दृच्छून्ये नियमनबलार्चिर्जितः प्राणवायुर्दद्यादायुर्नियतममरप्रार्थितांश्चैव सिद्धीन् । पार्ष्णी योनौ घटितमपरं भूमिसंलग्नपृष्ठं कृत्वाऽङ्गुष्ठं दृढकरतलाबद्धमप्याशु कुर्वन् ॥ १२ ॥ आपूर्याभं कपमथ घनात्कगठबन्धं विधास्यन्प्राणं मध्यं

---

१ 'आकृष्टः स्याकर्षश्चपुमानयं' श्रीभोजः ।

नयतु विधिनेयं महामुद्रिकोक्ता । तावद्यावद्भवति सदृशा संख्यया वामभागे सूर्याङ्केऽथाप्यनुदिनमिमां शीलयेद्बुद्धियुक्तः ॥ १३ ॥ नीत्वा चञ्चूपुटसदृशतामोष्ठयोर्लग्नजिह्वामाकृष्याभं कृपमजुमनाः कुम्भयित्वाऽथ मन्दम् । फूत्कारं चिद्गगनकुहरे सन्ततीकृत्य मोदात्कुर्यान्नासापुटयुगवशाद्रेचकं गुह्यमुत्तमम् ॥ १४ ॥ एतत्तुनृड्ज्वरहरमतिप्रौढशास्त्रप्रबन्धे शक्तिं दद्याद्धृदि परसुखं चैव कार्यं तदेवम् । कार्गोभस्त्रासदृशमिह यः पूरयेद्रेचयेच्च नाडीशुद्धिर्भवति यमनादग्निमासोर्ध्वतो वा ॥ १५ ॥ कुंभो द्वेधा भवति सहितः केवलश्चेति तावत्कुर्यान्नित्यं सहितमिह यावद्भवेत्केवलाख्यः । हित्वाऽऽकर्षं पुनरपि मरुद्रेचकं साधितेऽस्मिन्सम्यक्सिद्धं दिवि भुवि समुद्रादिकेऽप्यस्य सर्वम् ॥ १६ ॥ मात्रावृद्ध्या परिचितमरुद्ब्रह्मरन्ध्रं गतश्चेन्नादव्यक्तिर्भवति सुतरां कुण्डलीसुप्रबोधात् । सेयं शक्तिः स्वपिति नियतं ब्रह्ममार्गं स्ववक्त्रेणाच्छाद्यैनामुपरि गतनिद्रां नयेत्सावधानम् ॥ १७ ॥ पार्ष्ण्या बध्वागुदमथ समाकृष्य मध्यं स्वकीयं पश्चाद्वायुं हृदयकमले कण्ठसङ्कोचनेन । गाढं बद्धं कुरु निजहनुं कुण्डलीबोधनार्थं सम्यग्बन्धत्रितयमुदितं जन्मसंसारजैत्रम् ॥ १८ ॥ दीर्घीकुर्वंस्त्विह शिखिशिखां मारुतेनाहतां संतप्तां कृत्वा द्रुतमथ तयोत्थापयेदादिशक्तिम् । बन्धश्चैवं नयति पवनं मध्यमार्गं स्वयं हृद्युक्तं कुर्यान्नियतमपरं द्वन्द्ववर्गं च वेगात् ॥ १९ ॥ अस्मिन्नित्यं दृढपरिचिते ना मतः कोऽत्र भूमौ गत्वा मत्योर्वदनकुहरेऽप्यस्य भीर्नैव यत्तत् । पारम्पर्यादधिगतमिदं शीलयेन्नित्ययुक्तः संसिद्धिस्तं प्रविशति तरां सम्यगभ्यासयोगात् ॥ २० ॥ स्वोदर्याग्नेर्जलमिव भवेदन्यथा शीलितश्चेदुड्डीयानो विधिमनुसृतो मातरिश्वायते च । तद्वत्कण्ठीरवपतिरयं मृत्युभेन्द्रस्य चोक्तः सम्यङ्कोचेदपि यमवतां कालतीक्ष्णातिगत्या ॥ २१ ॥ मूलस्थाने प्रवदति सुधीर्मूलबन्धं तदूर्ध्वं तूड्यानाख्यं नियमिविनुतं पश्चिमं तानरूपम् । नाभौ वक्षस्यपि च चिबुके स्थापिते वक्ति चैतं साक्षाज्जालन्धरमिह सुधापातविच्छेदहेतोः ॥ २२ ॥ मूले बन्धो भवति सुखदः सर्वदाऽभ्यासयोगे कंठस्थाने स तु नियमिनां पूरकान्ते दृढः स्यात् । कुम्भान्ते संस्मरति नियतं रेचकादौ विशिष्टं तूड्डीयानं निरवधिकृपापूर्णतीर्थांघ्रितीर्थम् ॥ २३ ॥ चेतोवृत्त्या भवति

मरुतो धारणा यत्र सम्यक्त्रोत्थान्संहरति सकलानामयाञ्शीघ्रमेषा । तस्मात्काये पवनयमनं षोडशाधारदेशेष्वङ्गुष्ठादिष्वपि नियमिना सर्वदाऽऽरोग्यसिध्यै ॥ २४ ॥ अथवा वामेन तु चरणपाष्र्ण्यैव १चाधोय जानुन्यन्यं पादं सपदि घटयन्भूमिसंलग्नहस्तः । मन्दं मन्दं नियमितमनाः स्फिचौ ताडयेद्यस्तस्यारूढो भवति पवनः शून्यमार्गं क्षणेन ॥ २५ ॥ सिद्धैर्गुप्तो निरुपमगुणैर्यो महावेध उक्तः सोऽयं लोकद्वयमसुभृतामष्टसिध्येकपात्रम् । यन्त्रं मर्त्यैर्वदनकुहरस्येन्द्रजालिकजालं तस्माच्चित्यं दृढमनुसरेदस्य संशीलनं ना ॥२६॥ पूर्वं स्वेदोऽभव इह मतो मर्दनं तेन कार्यं पश्चात्कम्पस्तदनु भविता दार्दुरी पद्मपीठे । प्राणायामोत्तम उपगतस्त्वग्निमात्रासमं यो रोधस्तस्मिन्विसृजति भुवं भेकवद्युक्तयोगी ॥ २७ ॥ सिन्धुस्नायीगतलवणतस्तालुमूलं दिनादौ घृष्ट्वा जिह्वोद्गमनविधिना चालनं चैव दोहम् । कृत्वाऽऽमासं स्पृशति सुखवृत्त्यैव सा नासिकाग्रं यत्तन्मूलस्थितलघुसिराकर्तनं तेन कुर्यात् ॥ २८ ॥ यस्येयं संस्पृशति प्रथमेवैव योगार्हे उक्तो यत्नाद्यस्य स्पृशति सततं मध्यमोऽयं ततोऽन्ये । हीनाः क्षाराद्रिलय इह नोचेत्सिराबन्धनस्य हन्त्रीवल्या त्वरपदगया छेदकार्या न चान्यैः ॥ २९ ॥ होगोदोहोऽभवमथ जले भङ्गराजस्य सम्यक्पत्त्वा जिह्वां गमय सह तेनोर्ध्ववक्त्रां कपाले । संघृष्यादौ खमुपरिगं संस्पृशन्ती स्थिता यत्तन्मुद्रैषा जगति परमा योगिसर्वस्वपेटी ॥ ३० ॥ खेचर्याख्या भवति रसना चित्तयुक्ता खसंस्था ह्यन्वर्थैषा जनिमृतिमहारण्यभेत्त्री कुठारी । एवं चन्द्रामृतमपि पिबेद्यः क्षणं संस्थितः सन्मासादर्वाग्जयति यमवान्कोऽपि मृत्युं न शङ्का ॥ ३१ ॥ क्षुत्तृण्मोहज्वरजडिमरोगादिकं नास्य किंचिद्रिन्दोः पातो नहि भवति यस्यास्ति मुद्रा समुक्ता । जीवेत्सोऽयं चिरमिह मृणालातिकान्तिर्नराग्र्यः सारज्ञोऽष्टादशविभवयुक्तश्च नित्याधिवासी ॥ ३२ ॥ अजिह्वोऽथाङ्कृति शशिसिरायां तयोङ् सूर्यनाड्यामप्यामन्यधिकतररया-ज्जिह्वया ताडयित्वा । मङ् खे तद्द्वमय सह वायुं तया मध्यनाड्यामेतद्धुलं यमिवरगुरोर्वाङ्करन्ध्रं प्रपद्ये ॥ ३३ ॥ जिह्वामन्तर्दृशमथ बहिर्भ्रूयुगान्ते निबध्नीरूपं यः स्मरति भगवद्रूपमन्तर्मनस्कः । उन्मन्यस्मिन्नणा उदयमी-

१ योनिस्थानम्-( रसनगमधः, इति को० )

यात्स्वयं राजयोगाकाङ्क्षी चैतां कलयतुतरां शीघ्रसिध्या इयं यत् ॥ ३४ ॥ नित्यं सारप्रपतनवशात्तालुमूलस्यचन्द्रात्कायापायो न तु नियमिनां खेचरी सिद्धिभाजाम् । चन्द्रस्थैर्ये कुरु नियतवृत्त्यैव तद्बन्धनाद्यन्नान्यः पन्था जगति विहितः कायसिध्यै नराणाम् ॥ ३५ ॥ ज्ञात्वा कालागमनममृतस्यन्दसंदोहगेहं गत्वा स्थातुं यमिभिरमराराधितैश्शक्यते हि । यस्मात्कालोऽप्यभिभवति नो यद्गुहाधिष्ठितं तत्कमैतत्प्रोच्यत इह मुदा वञ्चनं कालमृत्योः ॥ ३६ ॥ सोऽहंभावाचयनयुगलं किञ्चिदुन्मील्य वा यस्त्वन्तर्भ्रूयुग्दहरविवराद्रूर्ध्वगं सच्चिदेकम् । तेजः पश्येत्स्थिरतरदृशा भ्रूयुगं किंचिदुत्क्षिप्यास्यैव स्यादनुभवबलं दिव्यदृष्टिश्च तस्मिन् ॥ ३७ ॥ एषा शांभव्यखिलयमिनां सन्ततानन्दवल्ली भद्रा मुद्रा निखिलनिगमान्तार्थगम्याऽतिगुप्ता । तुर्यावस्थां जनयति सदा सम्यगभ्यस्यमाना सिद्धिं चैवोपरि बहुतरां यत्नवज्जं क्षणेन ॥ ३८ ॥ तर्जन्या यः पिहितनिजकर्णः स्वनं यं शृणोति तस्मिंल्लीने मनसि नयनान्तर्गतानीलरूपम् । ज्योतिःस्थानं सततमवलोक्यायमाप्नोति शीघ्रं पूर्णानन्दामृतपदममेयं निरालंबवृत्त्या ॥ ३९ ॥ यस्मिन्स्वच्छे ख उपरतं स्यान्मनो निर्निरुद्धं यस्मिन्दृष्टिर्भजति सुतरां स्थैर्यमालोकहीना । यस्मिन्काले पवनविलयश्चापि मुक्त्वाऽवरोधं तस्मिन्काले भवति सहजा खेचरी सिद्धिरुक्ता ॥ ४० ॥ यमीन्द्राणां हृत्कैरवसुकृतपूर्णामृतकरो जयत्यद्वैताख्यश्रुदधिनिलयो योऽत्रविदितः शिशोर्नाम्ना तत्पद्रतिरहमिमां 'नीलगल' इत्युदीतः सम्पाद्यार्पय उपरि 'योग्यु'क्तचरणे ॥ ४१ ॥

हरिः । ओम् ॥ इति योगमञ्जरी समाप्ता ॥

---

## अमृतलताप्रारम्भः ॥

ओं नमोगणेशाय । हरिः ॥ तस्मा अभकनाम्ने कस्मैचन तेजसे नमो मेऽदः । खानिलवन्ह्यबुज्यागतं स्रक्फणिसदृशं यतः समुद्भूतम् ॥ १ ॥ १प्रणिगदिकर्मोक्रियते परमिह संवित्स्वरूपमिति सर्वैः । भद्रं कथीष्ट हैयंगवीनपेयं

---

१ प्रतिपाद्यते-निगद्यत इत्यर्थः ॥

प्रविश्य १दौर्भाग्यम् ॥ २ ॥ मायाकार्यमशेषं मायैव परं निरूपणे नान्यत् । यद्वटकटकाद्यखिलं मृद्धाटकमुख्यरूपतो विदितम् ॥ ३ ॥ स्वप्न इवात्र च कण्ठे जागर्ति चित्कुड्य एव सेयमपि । जागतचित्रं रचयति नश्यति सम्यङ्-निरीक्ष्यमाणैषा ॥ ४ ॥ सत्त्व कार्यैश्च हि तुच्छाऽनिर्वचनीया च वास्तवी कथिता । श्रौत्या विचारदृष्ट्या लौकदृशा चापि सा स्वयं क्रमशः ॥ ५ ॥ यामा सेयं मायाऽविद्या या नैव विद्यते साक्षात् । प्रोच्यत एवं बहुधा ज्ञानेन विनश्यतीति चाज्ञानम् ॥ ६ ॥ २अपवरकस्थतमोवत्स्वाश्रयविषयैयमीर्यते मुनिभिः । जीवाश्रयेति केचन तदसमञ्जसमदोऽनुभवदोस्स्यात् ॥ ७ ॥ यत्पूर्व-सिद्धतमसः पश्चिम इह नाश्रयस्तथा विषयः । अपिच भवेज्जीवाश्रयता-ऽत्राज्ञानाभिमानिता बलतः ॥ ८ ॥ तिग्मगुमिवान्धकारं नावरिता चितिमि-तीह मास्तु घृतिः । साऽस्या वृत्तिचितेरिव यन्न विरोधः स्वकीयसंश्रयतः ॥९॥ तदिदं तथा यथाऽरणिसंस्थशिखी नैव बाधकस्तमसः । किन्तुमथनोत्थपावक एव भवेत्साधु साधकस्त्वपरः ॥ १० ॥ विक्षेपावृतिभेदेनेह द्वैरूप्यमुच्यते शक्तेः । विक्षेपाभिधशक्तिर्लिङ्गाद्यण्डान्तमुत्सृजेदपरा ॥ ११ ॥ आवरणाख्या-ऽऽवरते ह्यन्तर्दृग्दृश्यभेदमथ बाह्ये सर्गब्रह्मविभेदं [illegible]षा संसारहेतुरिति विद्यात् ॥ १२ ॥ लोकं कर्तुमकर्तुं वाऽन्यथा कर्तुमीष्ट एव इतीट् । वश-मायोपाधिकदितः श्रुतितः स ब्रह्म कारणं कथितम् ॥ १३ ॥ जागतविभ्रमव-र्गस्याधिष्ठानं भवेद्यदेतदिह । त्रैयन्तेषु समुक्तं ब्रह्मपदेनान्वहं स कू[illegible]स्थः ॥१४॥ योऽधिष्ठानतयोक्तो देहद्वयचेतनस्तु न साक्षी । जीवः साधिष्ठानव्यष्ट्यज्ञा-नोदरस्थिताभासः ॥ १५ ॥ सत्यो भवति न चैषां भेदस्त्वौपाधिको भवे-त्किन्तु । ऐक्यमखण्डरसं तद्घटेत वेदान्तवाक्यपरिचिष्ठम् ॥ १६ ॥ शुद्धचि-तीशौ ४जीवस्तद्वज्जीवेशयोर्भिदाऽविद्या । तच्चिद्युपराग एवं षण्णोऽनादय उदीरता आर्यैः ॥ १७ ॥ संसृतिवततेर्बीजं वाऽध्यारोपं वदन्त्यथाध्यासम् । सोऽतस्मिंस्तद्बुद्धिः ५समकन्तुममां द्विधायमुपदिष्टः ॥ १८ ॥ एको ज्ञानाध्या-सस्त्वन्योऽर्थाध्यास उच्यते स पुनः । अर्थाध्यासो द्वेधा स्वरूपसंसर्गभेदतः

---

१ दौरात्म्यम् । इति पाठः ॥ २ गहनम् ॥ ३ क्वेशत ईशनीभिः । इति अथर्वशि० उ० ॥ ४ स्यनयोर्भादो द्वयोस्तथाति पा० ॥ ५ समः सर्वः ॥

कथितः ॥ १९ ॥ अज्ञानविषयरज्जुविहिरर्थाध्यासः समादृतः सद्भिः । रज्जुभुजङ्गज्ञानं ज्ञानाध्यासश्च सम्प्रोक्तः ॥ २० ॥ आत्मन्यनात्मवर्गस्योक्तोऽध्यासः स्वरूपतस्तस्य । संसर्गाध्यासः स्याच्चित्यमविद्याद्यनात्मनिवहे तु ॥ २१ ॥ अप्रत्यक्षाकाशे तलमलिनत्वादिकं च यद्बालाः । अध्यस्यन्ति परोऽप्यय एवमविद्याद्यनात्मकारोपः ॥ २२ ॥ यस्याभावेऽध्यासो भवेच्च तस्मादनाद्यनिर्वाच्यम् । अध्यासोपादानं मन्यत इह भावरूपमज्ञानम् ॥ २३ ॥ एतमविद्याख्यं पुनरन्योन्याध्यासरूपमनुरुध्य । लौकिकवैदिकमुख्यव्यवहाराः स्युर्न सन्तु तेऽथ यथा ॥ २४ ॥ खादिष्वहं वियुक्तस्येह नहि स्यात्प्रमातृताऽभावे । अस्याश्चैव प्रमाणप्रवृत्तिनिचयोपपत्तिरपि न स्यात् ॥ २५ ॥ इन्द्रियमनुपादाय व्यवहारो नापरोक्षमुख उदियात् । व्यापारोऽपिच खानां नेहाधिष्ठानमन्तरा सिध्येत् ॥ २६ ॥ व्याप्रियते न च देहेनानध्यस्तात्मभावतः पुरुषः । न्यस्तेऽर्थेऽसति भविता नासङ्गस्यात्मनः प्रमातृत्वम् ॥ २७ ॥ उक्तान्येवमविद्यावद्विषयाण्यपि भवन्ति शास्त्राणि । प्रत्यक्षादिसमस्तप्रमाणवर्गाणि चेति तद्वेद्धि ॥ २८ ॥ अविशेषाद्यत्पशुभिश्चार्थैः श्रोत्रादिकस्य संबन्धे । सत्यनुकूले ज्ञाने यान्त्यभिमुख[illegible]न्यथा निवर्तन्ते ॥ २९ ॥ संसारोऽयं सत्यः संलग्नः स्वात्मनीति विभ्रान्तिः । येयमविद्या नात्मन आभासस्यैव संसृतिस्त्वपि तु ॥ ३० ॥ एतद्विविच्य वस्तुस्वरूपधारणमिहोदिता विद्या । आभासस्य हि सिद्धाः सप्तावस्था इमा [1]निरुच्यन्ते ॥ ३१ ॥ अज्ञानमेकमपराऽऽवरणाहृयाऽन्या भ्रान्तिः परोक्षविदितं त्वपरोक्षबोधः । अन्यः शुचाविलय एव परोऽतिहर्ष एता दशा 'भवत आसु हि बन्धमोक्षौ' ॥ ३२ ॥ पूर्वं स्मृता मनुजबन्धकृतस्तु तिस्र उक्ताश्चतस्र इह मुक्तिकृतश्च पश्चात् । दृक्प्रागभावसहितं प्रवदन्ति मूलमज्ञानमेव नहि वेद्म्यहमित्यमुष्य ॥ ३३ ॥ गत्वाऽपथेन बहुधा विपरीतभावाद्ब्रह्मास्ति न स्फुरति चेति यदाह तत्वम् । तद्व्याहृतं छिदुरिहावृतिकार्यमार्या विक्षेपमेतमपि देहयुगानुबद्धम् ॥ ३४ ॥ आभास'मेव नियतं खलु

१ निगद्यन्ते । पा० ॥ २ वृतिनामिका । पा० ॥ प्रकारपूर्वाक्षरस्य पिङ्गलादिभिर्विकल्पेन गुरुत्वमुक्तम् । कुमारदासादिभिर्महाकविभिः प्रयुक्तं च ॥

बन्धकोऽस्य कर्तृत्वमेव सुखदुःखनिबन्धनं च । ज्ञानद्वयेन लयमेष्यति सा क्रमेणासत्त्वावृतिः पुनरभानपदोदिता च ॥ ३५ ॥ नष्टेत्वभानमुख आवरणे स्वजीवत्वारोपनाशनशर्माद्विलयं प्रयाति । कर्तृत्वमुख्यसमशोक इहैव संसाराख्यस्ततः परमुदेत्यतिशर्म उक्तः ॥ ३६ ॥ यद्वत्त्वमेव दशमो भवसीति वाक्यात्स्वात्मन्युदेति धिषणा स्वपरोक्षनाम्नी । तद्वद्विविच्य शतशो विधुतेऽयमात्मा ब्रह्मेत्यथर्वणगिरोऽर्थ उपैति सिद्धिम् ॥ ३७ ॥ जाग्रत्काले संविदो गोचरा ये शब्दस्पर्शाद्यास्तथाऽऽकाशमुख्याः । भिद्यन्ते वैचित्र्यतोऽन्योन्यमेते संविन्मात्रं भिद्यते नैकरूप्यात् ॥ ३८ ॥ एवं स्वप्ने [1]स्थायि नो वस्तु वेद्यं जाग्रद्वेद्यं स्थाय्यतस्तद्भिदाऽपि । संविद्भेदो न स्मृतः सैकरूपा सुप्तोत्थानं कुर्वतः पूरुषस्य ॥ ३९ ॥ यः सौषुप्तज्ञानबोधः स्मृतिः स्यात्सेयं प्रोक्ताऽत्रानुभूतार्थरूपा । तस्माद्वेद्यं तत्तमश्चावबुद्धं सम्यक् काले स्वाप्यये बोध एषः ॥ ४० ॥ अर्थाद्भिन्नो नैव बोधात्कथञ्चित्स्वप्नज्ञानं [2]वा तदेवं भवेत्सा । संवित्तिस्थानेऽपि च स्वप्रभैका काले कस्मिंश्चिन्न हानिर्न वृद्धिः ॥ ४१ ॥ सेयं संवित्परमानन्द आत्मा परप्रेमास्पदमित्युच्यते यत् । अहं मा भूवं न भूयासमेवं प्रेमाऽऽत्मन्युद्वीक्ष्यते सार्व एषः ॥ ४२ ॥ तत्प्रेमात्मार्थं भवेत्स्वातिरिक्ते नान्यार्थं तद्भविता स्वात्मनीदम् । तस्मात्तस्यात्परमं तेन नित्यात्मन उक्तैवं परमानन्दताऽस्य ॥ ४३ ॥ अनुगतं समवस्तुषु यत्परं निरपवादमिदं सदवेहि तत् । अधिगते सति तत्पद उच्चकैस्त्यज मृषाजगदस्तिपदाश्रितम् ॥ ४४ ॥ तदनुशिष्टमहंपदलक्षितं स्वयमहं तदिति त्ववधारय । सदधिरोपितवस्तु तदात्मना विलयमेति मरौ दकधीर्यथा[3] ॥ ४५ ॥ यदिह चित्तमुखेन्द्रियसन्ततिव्यवहृतावुदितं परकारणम् । निरुपधीतिवचोऽतिगमाश्रयं तदवधारय निर्भयमों स्वयम् ॥ ४६ ॥ विपदिवाधिकपूर्णमशेषहृत्स्थितमनन्तमनामयमद्वयम् । यदुपदिष्टमिव श्रुतिमस्तकैस्तदव० ,, ॥ ४७ ॥ यदनुभाति [4]महोनिकुरंबकं रविशशिप्रमुखं यदलेपकं । पशुकुणपमनोविदितात्मकं तदव० ,, ॥ ४८ ॥ यत

---

१ स्थिरम् ॥ २ इव ॥ ३ जलभ्रान्तिः ॥ ४ तेजः समूहः ॥

इदं निखिलं मतमंशुवत्पट इवाभरणं कनकादिके । यदनुविद्धजडं स्फुरतीव च तदव० „ ॥ ४९ ॥ इति धृता मतिरप्यचलेऽव्यये निरभिमान-बलेन विधूय च । सदसदाशयजालमियाल्लयं कतकधूलिरिवांबुनि स्वात्मना ॥ ५० ॥ धृतिमिमां न गुरोः करुणां विना क्वचिदुपैति पुमानपि कश्चन । चिदुपसत्तिवशादुदयत्यसाविति विभुं हृदयेशमनुव्रजेत् ॥ ५१ ॥ अपि दविष्ठमिहेशकृपालवः सपदि नेदयति ४स्वचिदास्थितम् । यदि कृपाऽस्य भवेन्नहि दुर्लभं क्वचन किञ्चन सोऽतदुपास्यताम् ॥ ५२ ॥ प्रणवरूपपरात्मविभावनादज इयात्स्ववशं व्रदतां लघु । विभुनराक्रिपया सहजा भवेदिति पतञ्जलिराह न तन्मृषा ॥ ५३ ॥ हरिः ॥ शिशुसमाख्यमुनीन्द्रपदाम्बुजस्रुतमरन्दझरीपवितांकुरा । असितकंधरतीर्थविनिर्मिताऽमतलता जयताद्दिशुवादगा ॥ ५४ ॥ ओं तत्सत् ॥ शान्तिः ॥

इत्यमत कल्पलताख्या कैवल्यकंदली समाप्ता ॥

---

## कालीपञ्चकम् ।

हरिः । ओँ ॥ श्रुत्वामातृर्निलीनाः सुरमुनिवचनात्स्वावमानं च सम्यक्कुप्यत्कालाग्निरुद्रात्मकहरनिटिलाद्युत्थिता भैरवी या । ब्रह्माण्डव्याप्तदेहा भिदिभकरसहस्राधिका घोररूपा कण्ठेकालीसदा सा वितरतु करुणाद्रान्तरात्माशिवं मे ॥ १ ॥ लब्ध्वाऽज्ञां करोतुं दनुजकुलपतिं दारुकं वाहनार्थे वेताल्ये संप्रतिज्ञाय च रुधिरमयीं शीधुमेनां प्रगृह्य । सार्धं यया मातृभिर्या हतकरिपुपुरं द्रागवाप त्रिभीमा कण्ठेकाली० ॥ २ ॥ युद्धे या ब्रह्मदण्डं विसृजति दनुजाधीश्वरे दारुकाख्ये ब्रह्माणी ब्रह्मणोऽर्ध्याऽस्त्विति समरतलात्सन्निवर्त्य स्वमात्रा । याचित्वाऽऽप्याप्य यत्या मनुयुगममुना दण्डतस्तत्प्रयोक्त्री कण्ठेकाली० ॥ ३ ॥ भीत्या पातालमीतासुरवरपथमाकाशवाचाऽवबुध्वा सिष्णासू रक्तपूरे भुवनमपिरविं जिह्वया कैशिकैश्च । या

---

१ ब्रह्मस्वरूपेण ॥ २ समीपस्थं करोति ॥

३ स्वरूपावस्थानमिति भावः ॥

स्थित्वाऽऽक्रम्य रात्रीत्युपरि गतममुं प्राप्तिपञ्जकृपाखे कण्ठेकाल० ॥ ४ ॥ शूलाग्रेकृत्य खात्वास्य च भुवि तरसाऽऽविध्य तद्वत्समुच्चै रक्ताक्ताङ्गाऽभवद्या-पुरदमयितुरात्मोद्भवाऽभीतिदात्री यामस्तोष्टेन्द्रमुख्यास्त्विह जनकगिरेऽ-स्मात्सुखं पाति यत्थं कण्ठेकाल० ॥ ५ ॥ पञ्चकं भद्रकाल्या यः पठेदिदम-नुत्तमम् । नीलकण्ठं तस्य भयं न भवेत्क्वचिदत्र च ॥ ६ ॥

इति स्तुतिमुक्तालतान्तर्गतं कालीपञ्चकं समाप्तम् ॥

---

हरिः । यमवाप्य समागमैकमुष्टिन्ध्यमद्वैतधुरंधरं दुरापम् । नवजेज्जनयित्रवर्त्मे कश्चिच्छिशुनीमाऽवतु मां स पूज्यपादः ॥ १ ॥ य इलाङ्गनाङ्किकान्तवासिप्रभृतीनां कलिकालिकं भयं घ्नन् । प्रणिपच्छति सत्यबुद्धिमेकः शिशु० ॥ २ ॥ करुणावरुणालयं यमाहुर्गुटिकासिद्धिमुखस्य चैकवस्त्यम् । अपि चिद्गुसदं गिरीन्द्रसंस्थं शिशु० ॥ ३ ॥ इह पक्किमया तपस्ययैकः करसंस्थामलकीफलाविभेदम् । उपदेक्ष्यति यः परात्मनिष्ठां शिशु० ॥ ४ ॥ निशिचात्रभवत्युपारतेऽन्तर्दृशि यस्मिन्निजकुण्डिकापहारी । न पदं चलितुं स्वयं शशाक शिशु० ॥ ५ ॥ किमिदं बहुभूतिकस्य वाग्रे नहि शंशत्स्यत एव कश्चनेति । विपरीततया प्रवर्तितुं च शिशु० ॥ ६ ॥ सहजामृतधारयाऽभिवृष्टं यमिनां यो विदधाति चित्तवप्रम् । निजबोधसमाख्यबीजवाप्यं शिशु० ॥ शिशु संज्ञमुनीन्द्रसप्तरत्नं तदतीताङ्घ्रिसरोजषट्पदेन । असितादिककन्धरेण भक्त्या रचितं यः पठतीह मुच्यतेऽसौ ॥ ८ ॥

इति श्रीमदाराध्यपादसप्तकं स०

इति स्वाराज्यसर्वस्व-कण्ठामृतादि-कार-,पण्डितपदाङ्कितवर्णाश्रमि श्रीनीलकण्ठतीर्थस्वामिकृतिः–योगामृतझरी समाप्ता ॥

---

## श्रीगणेशपंचकम् ।

गंगायमीयुतिसुहृन्मयि सर्वदास्याद् गौर्यंग्यसूनुकरुणार्द्रदृगन्तपातः । येनान्तरायपटलीमतिवर्त्य याति वांछाधिकं खलु फलं भुवनत्रयी द्राक् ॥ १ ॥ उच्छूनतां व्रजति सर्वचराचरांकबीजप्ररोहजननोन्नतिकर्मयोगात् । यस्य स्वतः स्फुरदखण्डचिदेकभूम्नः स प्रत्यहं गणपतिः प्रतिभां क्रियान्नः ॥ २ ॥ विद्याधिराज्यकमलाधिगमे तु सा मे कुम्भस्थलीमुकुरभावमुपैतु साक्षात् । वैनायकी समकलाकलनाभिवैक्ये नित्यं त्रिविष्टपसदो रचयन्ति यत्र ॥ ३ ॥ श्रीरत्नगर्भगणनाथ भवत्पदांबुजन्मोदरापियमरन्द धुरंधरं माम् । क्षिपप्रसादबिरुदांकित पालय त्वामाधारशक्तिविधिनाऽमतविघ्नमोहे ॥ ४ ॥ शुण्डाग्रजाग्रदभिलिप्सितवस्तुजातसंपूर्णभर्मकलशं कुशलं विदध्यात् । हेरंबनाम शिवयोः परमेकमाप्तं प्रेमायितं किमपि धाम दिविस्थितं सत् ॥ ५ ॥ श्रीनीलकंठतीर्थस्वाम्यंघ्रिसेवात्तसन्मतिः । 'शिवप्रसाद नामेदमकरोत्सज्जनार्चकः ॥ ६ ॥

शिवम् ॥

---

## शुद्धपत्रम् ॥

| पृष्ठ० | पं० | शुद्धपाठः |
|---|---|---|
| १ | १ | 'सर्वोत्कृष्टं' |
| ४ | १ | नाम ' दिवसगमने ' इति स्खलितम् |
| ७ | ८ | 'गात्र'मीडे |
| ,, | १८ | 'विभुः'स्यात् |
| १० | ८ | 'त्यशानि' |
| ,, | १९ | ऽपनय'ता'द् |
| ,, | २३ | 'नुत्तेन्द्र' |
| ११ | १ | 'रिपुं'हन्ता |
| १२ | १० | न्याया'त्' |

---